॥श्रीगणेशायनमः॥ ॐ अस्य श्रीरामचंद्रस्तवराजस्तोत्रमंत्रस्य
सनत्कुमार ऋषिः ॥ अनुष्टुप्छंदः ॥ श्रीरामो देवता सीताबीजम् ॥
हनुमान्शक्तिः ॥ श्रीरामप्रीत्यर्थे जपे विनियोगः ॥१॥ सूत उवाच
सर्वशास्त्रार्थतत्त्वज्ञं व्यासं सत्यवतीसुतम् ॥ धर्मपुत्रः प्रहृष्टात्मा
प्रत्युवाच मुनीश्वरम् ॥२॥ युधिष्ठिर उवाच ॥ भगवन्योगिनां श्रेष्ठ
सर्वशास्त्रविशारद ॥ किं तत्त्वं किं परं जाप्यं किं ध्यानं मुक्तिसाध
नम् ॥३॥ श्रोतुमिच्छामि तत्सर्वं ब्रूहि मे मुनिसत्तम ॥ वेदव्यास उवा
च ॥ धर्मराज महाभाग शृणु वक्ष्यामि तत्त्वतः ॥४॥ यत्परं यद्गुणातीतं
यज्ज्योतिरमलं शिवम् ॥ तदेव परमं तत्त्वं कैवल्यपदकारणम् ॥५॥

॥१॥ श्रीरामेतिपरंजाप्यंतारकंब्रह्मसंज्ञकम्॥ब्रह्महत्यादिपापघ्नमि
तिवेदविदोविदुः॥६॥श्रीरामरामेतिजनायेजपंतिचसर्वदा॥तेषांभु
क्तिश्चमुक्तिश्चभविष्यतिनसंशयः॥७॥स्तवराजंपुराप्रोक्तंनार
देनचधीमता॥तत्सर्वंसंप्रवक्ष्यामिहरिध्यानपुरःसरम्॥८॥तापत्र
याग्निशमनंसर्वाघौघनिकृंतनम्॥दारिद्र्यदुःखशमनंसर्वसंपत्क
रंशिवम्॥९॥ विज्ञानफलदंदिव्यमोक्षैकफलसाधनम्॥नमस्कृ
त्यप्रवक्ष्यामिरामंकृष्णंजगन्मयम्॥१०॥अयोध्यानगरेरम्येरत्न-
मंडपमध्यगे॥स्मरेत्कल्पतरोर्मूलेरत्नसिंहासनंशुभम्॥११॥तन्म
ध्येऽष्टदलंपद्मंनानारत्नैश्चवेष्टितम्॥स्मरेन्मध्येदाशरथिंसह

स्त्रादित्य तेजसम ॥१२॥ पितुरंकगतं राममिंद्रनीलमणिप्रभम् ॥ को
मलांगं विशालाक्षं विद्युद्वर्णांबरावृतम् ॥१३॥ भानुकोटि प्रतीका
शं किरीटेन विराजितं ॥ रत्नग्रैवेयकेयूररत्नकुंडलमंडितम् ॥१४
रत्नकंकणमंजीरं कटिसूत्रैरलंकृतम् ॥ श्रीवत्सकौस्तुभोरस्कंमु
क्ताहारोपशोभितम् ॥१५॥ दिव्यरत्नसमायुक्तमुद्रिकाभिरलंकृतम्
राघवं द्विभुजं बालं राममीषत्स्मितान्नम् ॥१६॥ तुलसीकुंदमंदार
पुष्पमाल्यैरलंकृतम् ॥ कर्पूरागरुकस्तूरी दिव्यगंधानुलेपनम्
॥१७॥ योगशास्त्रेष्वभिरतं योगीशं योगदायकं ॥ सदा भरत सौमित्रि
शत्रुघ्नैरुपशोभितम् ॥१८॥ विद्याधरसुराधीशसिद्धगंधर्वकिन्नरैः

॥२॥

योगींद्रैः नारदाद्यैश्चस्तूयमान महर्निशम् ॥१९॥ विश्वामित्रवशिष्टा
दिमुनिभिपरि सेवितम ॥सनकादिमुनिश्रेष्टैर्योगिवृंदैश्चसेवितम्
२०॥ रामंरघुवरंवीरं धनुर्वेदविशारदम् ॥ मंगलायतनंदेवं रामंराजीव
लोचनम् ॥२१॥ सर्वशास्त्रार्थतत्त्वज्ञमानंदकरसुंदरम् ॥ कौसल्या
नंदनंरामं धनुर्वाणधरंहरिम् ॥२२॥ एवंसंचिंतयन्विष्णुयज्ज्योतिरम
लंविभुम ॥ प्रहृष्टमानसोभूत्वामुनिवर्य्यसनारदः ॥२३॥ सर्वलोकहि
तार्थाय तुष्टाव रघुनंदनम् ॥ कृताञ्जलिपुटोभूत्वा चिंतयन्नद्भुतंहरि
म् ॥२४॥ यदेकं यत्परं नित्यं यदनंतं चिदात्मकम् ॥ यदेकं व्यापकंलो
के तद्रूपं चिंतयाम्यहम ॥२५॥ विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं

स्व मुखैक हेतुम॥ श्रीराम चंद्रंहरि मादि देवं परात्परं राम महं भजामि॥ २६॥
कविं पुराणं पुरुषं पुरस्तात्सनातनं योगिनमीशितारम्॥ अणोरणी
यांसमनंतवीर्यं प्राणेश्वरं राम मसौ ददर्श॥ २७॥ नारद उवाच॥ ना
रायणं जगन्नाथ मभिरामं जगत्पतिम्॥ कविं पुराणंवागीशं रामं दश
रथात्मजम्॥ २८॥ राज राजं रघुवरं कौसल्या नंदवर्धनम्॥ भर्गं वरेण्य
विश्वेशं रघुनाथं जगद्गुरुम॥ २९॥ सत्यं सत्यप्रियं श्रेष्ठं जानकी व
ल्लभं विभुम॥ सौमित्रिपूर्वजंशांतं कामदं कमलेक्षणम्॥ ३०॥ आ
दित्य रविमीशानं घृणिं सूर्यमना मयं॥ आनंद रूपिणं सौम्यं राघवं
करुणा मयम॥ ३१॥ जामदग्न्यं तपो मूर्त्तिं रामं परशुधारिणम्॥ वाक्प

॥३॥ तिं वरदं वाच्यं श्रीपतिं पक्षिवाहनम् ॥ ३२ ॥ श्रीशार्ङ्गधारिणं राममचि
न्मयानंद विग्रहम् ॥ हलधृग्विष्णुमीशानं बलरामं कृपानिधिम्
॥ ३३ ॥ श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतम् ॥ मत्स्यकूर्मवरा
हादीरूपधारिणमव्ययम् ॥ ३४ ॥ वासुदेवं जगद्योनिमनादिनिधनं
हरिम् ॥ गोविंदं गोपतिं विष्णुं गोपीजनमनोहरम् ॥ ३५ ॥ गोगोपाल
परीवारं गोपकन्यासमावृतम् ॥ विद्युत्पुंजप्रतीकाशं रामकृ
ष्णं जगन्मयं ॥ ३६ ॥ गोगोपिकासमाकीर्णं वेणुवादनतत्परम् ॥ का
मरूपं कलावंतं कामिनां कामदं विभुम् ॥ ३७ ॥ मन्मथं मथुरानाथं मा
धवं मकरध्वजं ॥ श्रीधरं श्रीकरं श्रीशं श्रीनिवासं परात्परम ॥ ३८ ॥

भूतेन्द्रं भूपतिभद्रं विभूतिभूतिभूषणम् ॥ सर्वदुःखहरं वीरं दुष्टदानववै
रिणम् ॥ ३९ ॥ श्रीनृसिंह महावाहु महांतं दीप्ततेजसम ॥ सच्चिदानंदम
यं नित्यं प्रणवं ज्योतिरूपिणम् ॥ ४० ॥ आदित्य मंडलगतं निश्चि
तार्थस्वरूपिणम् ॥ भक्तप्रिय पद्मनेत्रं भक्ताना मीप्सितप्रदम् ॥ ४१
कौसल्येयं कलामूर्त्तिं काकुत्स्थं कमलाप्रियम् ॥ सिंहासने समा
सीनं नित्यव्रतमकल्मषम् ॥ ४२ ॥ विश्वामित्रप्रियं दांतं स्वदारानिय
तव्रतम् ॥ यज्ञेन्द्रं यज्ञपुरुषं यज्ञपालन तत्परम् ॥ ४३ ॥ सत्यसंधं जि
तक्रोधं शरणागत वत्सलम् ॥ सर्वक्लेशापहरणं विभीषणवरप्रदम्
॥ ४४ ॥ दशग्रीवहरं रौद्रं केशवं केशिमर्दनम् ॥ वालिप्रमथनं वीरं सुग्रीवे

॥४॥ ष्मित राज्यदम ॥४५॥ नरवानरदेवैश्च सेवितं हनुमत्प्रियम् ॥ शुद्धं
सूक्ष्म परं शांतं तारकं ब्रह्मरूपिणम् ॥४६॥ सर्वभूतात्मभूतस्थं सर्वाध
रं सनातनम् ॥ सर्वकारणकर्तारं निदानं प्रकृतेः परम् ॥४७॥ निराम
य निराभासं निरवद्यं निरंजनं ॥ नित्यानंदं निराकारं मद्वैतं तमसः
परम ॥४८॥ परात्परतरं तत्वं सत्यानंद चिदात्मकम् ॥ मनसा शिर
सा नित्यं प्रणमामि रघूत्तमम ॥४९॥ सूर्यमंडलमध्यस्थं रामं सीता
समन्वितम ॥ नमामि पुंडरीकाक्षं ममेदं गुरुतत्परम् ॥५०॥ नमोऽ
स्तु वासुदेवाय ज्योतिषां पतये नमः ॥ नमोऽस्तु रामदेवाय जग
दानंदरूपिणे ॥५१॥ नमो वेदांत निष्ठाय योगिने ब्रह्मवादिने ॥ मा

यामय निरस्तायप्रपन्नजनसेविने ॥५३॥ वंदामहे महेशानं चंडको
दंडखंडनम् ॥ जानकीहृदयानंदवर्धनं रघुनंदनं ॥५४॥ उत्फुल्ला
मलकोमलोत्पलदलश्यामाय रामाय ते कामाय प्रमदामनोहर
गुणग्रामाय रामात्मने ॥ योगारूढमुनींद्रमानससरोहंसाय संसा
रविध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥५५॥ भवो
द्भवं वेदविदां वरिष्ठमादित्यचंद्रानलसुप्रभावम् ॥ सर्वात्मकं स
र्वगतस्वरूपं नमामि रामं तमसः परस्तात् ॥५७॥ निरंजनं निष्प्रति
मं निरीहं निराश्रयं निष्कलप्रपंचम् ॥ नित्यध्रुवं निर्विषयस्वरू
पं निरंतरं राममहं भजामि ॥५८॥ भवाब्धिपोतं भरताग्रजं तं भक्तप्रि

॥५॥

यं भानुकुलप्रदीपम् ॥ भूतत्रिनाथं भुवनाधिपत्यं भजामि रामं भ
वरोगवैद्यम ॥५७॥ सर्वाधिपत्यं समरे गभीरं सत्यं चिदानंदमयं स्वरू
पम् ॥ सत्यं शिवं शांतिमयं शरण्यं सनातनं राम महं भजामि ॥५८॥ का
यक्रिया कारणम् प्रमेयं कविं पुराणं कमलायताक्षं ॥ कुमारवेद्यं क
रुणामयं तं कल्पद्रुमं राम महं भजामि ॥५९॥ त्रैलोक्यनाथं सरसीरुह
क्षं दयानिधिं द्वंद्वविनाशहेतुम् ॥ महाबलं वेदनिधिं सुरेशं सनात
नं राम महं भजामि ॥६०॥ वेदांतवेद्यं कविमीशितारमनादिमध्यांत
मचिंत्यमाद्यम् ॥ अगोचरं निर्मलमेकरूपं नमामि रामं तमसः पर-
स्तात् ॥६१॥ अशेषवेदात्मकमादिसंज्ञमजं हरिं विष्णुमनंतमाद्यं ॥

अपार संवित्सुखमेकरूपं परात्परं राममहं भजामि ॥६२॥ तत्त्वस्वरू
पपुरुषं पुराणं स्वतेजसापूरित विश्वमेकम् ॥ राजाधिराजरविमंड
लस्थं विश्वेश्वरं राममहं भजामि ॥६३॥ लोकाभिरामं रघुवंशनाथं
हरिं चिदानंदमयं मुकुंदम् ॥ अशेषविद्याधिपतिं कवीन्द्रं नमामि
रामं तमसः परस्तात् ॥६४॥ योगीन्द्रसंघैश्च सुसेव्यमानं नारायणं
निर्मलमादिदेवम् ॥ नतोऽस्मि नित्यं जगदेकनाथमादित्यवर्णं त
मसः परस्तात् ॥६५॥ विभूतिदं विश्वसृजं विरामं राजेंद्रमीशं रघुवंश
नाथं ॥ अचिंत्यमव्यक्तमनंतमूर्त्तिं ज्योतिर्मयं राममहं भजामि ॥६६॥
अशेषसंसारविकारहीनमादित्यगं पूर्णसुखाभिरामम् ॥ सम

॥६५ स्तमाक्षि तमसः परस्तान्नारायणं विष्णुमहं भजामि ॥६७॥ मुनींद्र
गुह्यं परिपूर्णकामं कलानिधिं कल्मषनाशहेतुम् ॥ परात्परं यत्प
रमं पवित्रं नमामि रामं महतो महांतम् ॥६८॥ ब्रह्मा विष्णुश्च रुद्र
श्च देवेंद्रो देवतास्तथा ॥ आदित्यादिग्रहाश्चैव त्वमेव रघुनंद
न ॥६९॥ तापसा ऋषयः सिद्धाः साध्याश्च मरुतस्तथा विप्राः ॥ वे
दास्तथा यज्ञाः पुराणं धर्मसंहिताः ॥७०॥ वर्णाश्रमास्तथा धर्मा व
र्णधर्मास्तथैव च ॥ यक्षराक्षसगंधर्वा दिक्पाला दिग्गजादिभि
७१॥ सनकादिमुनिश्रेष्ठास्त्वमेव रघुपुंगव ॥ वसवोऽष्टौ त्रय
काला रुद्रा एकादश स्मृता ॥७२॥ तारकाश्च दिशाश्चैव त्वमेव रघु

व्यवस्थापक ५. ...

राम
३८

नंदनं॥ सप्तद्वीपाः समुद्राश्च नगाः नद्यस्तथा द्रुमाः ॥७३॥ स्थावरा
जंगमाश्चैव त्वमेव रघुनायक॥ देवतिर्यङ्मनुष्याणां दानवानां
तथैव च ॥७४॥ माता पिता तथा भ्राता त्वमेव रघुवल्लभ॥ सर्वेषां त्वं
परं ब्रह्म त्वन्मयं सर्वमेव हि ॥७५॥ त्वमक्षरं परं ज्योतिस्त्वमेव पुरु
षोत्तमः॥ त्वमेव तारकं ब्रह्म त्वत्तोऽन्यन्नैव किंचन॥७६॥ शांतं सर्व
गतं सूक्ष्मं परं ब्रह्म सनातनम्॥ राजीवलोचनं रामं प्रणमामि ज
गत्पतिम्॥७७॥ व्यास उवाच॥ ततः प्रसन्नः श्रीरामः प्रोवाच मु
निपुंगवम्॥ तुष्टोऽस्मि मुनिशार्दूल वृणीष्व वरमुत्तमम्॥७८॥
नारद उवाच॥ यदि तुष्टोऽसि सर्वज्ञ श्रीराम करुणानिधे॥ त्वन्मू

६

त्रिंदर्शनेनैव कृतार्थोऽहंच सर्वदा ॥७९॥ धन्योऽहं कृतकृत्यो
ऽहं पुण्योऽहं पुरुषोत्तम ॥ अद्यमे सफलं जन्म जीवितं सफलं
चमे ॥८०॥ अद्यमे सफलं ज्ञानं मध्यमे सफलं तपः ॥ अद्यमे सफ
लं कर्म त्वत्पादांभोजदर्शनात ॥८१॥ अद्यमे सफलं सर्वं त्वन्नाम-
स्मरणं तथा ॥ त्वत्पादांमोरुह द्वंद्व सद्भक्तिं देहि राघव ॥८२॥ ततः प
रमसंप्रीतः सरामः प्राहसं नारदम ॥ मेघगम्भीरया वाचा प्रहसन्नि
दमब्रवीत ॥८३॥ श्रीरामउवाच ॥ मुनिवर्यमहाभाग मुनेत्विष्टं द
दामिते ॥ यत्त्वया चेप्सितं सर्व मनसा तद्भविष्यति ॥८४॥ नारदउवा
च ॥ वरनयाचरघुनाथ युष्मत्पादाब्जभक्तिः सततं ममास्तु ॥

इदं प्रियं नाथ वरं प्रयाचे पुनः पुनस्त्वामिदमेव याचे ॥८५॥ वेद
व्यास उवाच ॥ इत्येवमीडितो रामः प्रादात्तस्मै वरांतरम् ॥ वीर रा
मो महातेजाः सच्चिदानंदविग्रहः ॥८६॥ अद्वैतममलं ज्ञानं स्व-
नामस्मरणं तथा ॥ अंतर्दधौ जगन्नाथः पुरतस्तस्य राघवः ॥८७
इति श्रीरघुनाथस्य स्तवराजमनुत्तमम् ॥ सर्वसौभाग्यसंपत्तिदा
यकं मुक्तिदं शुभम् ॥८८॥ कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तम
म् ॥ गुह्याद्गुह्यतमं दिव्यं तव स्नेहात्प्रकीर्तितम् ॥८९॥ यः पठेच्छृ
णुयाद्वापि त्रिसंध्यं श्रद्धयान्वितः ॥ ब्रह्महत्यादि पापानि तत्स

॥७॥ मानि वहूनि चे ॥९०॥ स्वर्णस्तेय सुरापान गुरु तल्यगतिस्तथा ॥
गोवधाद्युप पापानि अनृतात्स मवानि च ॥९१॥ सर्वैः प्रमुच्यते
पापैः कल्पायुत सतोद्भवैः ॥ मानसं वाचिकं पापं कर्मणा समु
पार्जितम ॥९२॥ श्रीराम स्मरण नव तत्क्षणान्न नूपति ध्रुवम ॥
इदं सत्य मिदं सत्य सत्यमेतदिहो च्यते ॥९३॥ रामः सत्यं परं ब्रह्म रा
मात्किंचिन्न विद्यते ॥ तस्माद्राम स्व रूपत्वात्सत्य सत्य मिदं जग
त ॥९४॥ श्री राम चंद्र रघु पुंगव राज वर्य राजेंद्र राम रघु नायक राघ
वेन्नाः ॥ राजाधिराज रघुनंदन राम चंद्र दासोऽहमद्य भवतः शरणा
गतोऽस्मि ॥९५॥ वैदेही सहितं सुरद्रुम तले हैमे महा मंडपे मध्येपु

ध्यक मासने मणिमय विरासने संस्थितम् ॥ अग्रे वाच यति प्रभंज
न सुत तत्त्वं मुनीन्द्रैः परं व्याख्यातं भरतादिभिः परिवृतं रामं भजे
स्यामलम् ॥ ९६ ॥ राम रत्न किरीट कुंडल युतं केयूरहारान्वितं सी
तालं कृतवामभाग ममलं सिंहासनस्थं विभुम् ॥ सुग्रीवादि हरी
श्वरैः सुरगणैः संसेव्यमानं सदा विश्वामित्र पराशरादि मुनिभिः
संस्तुयमानं प्रभुम् ॥ ९७ ॥ सकल गुण निधानं योगिभिः स्तुयमानं
भुज विजित समानं राक्षसेंद्रादि मानम् ॥ महित नृप भयानं सीत
यानुगोभमानं स्मर हृदय विमानं ब्रह्म रामाभिधानम् ॥ ९८ ॥ रघुवर
तवमूर्त्तिर्मामके मानसाब्जे नरक गति हरंते नामधेयं मुखेमे ॥ अ·

॥ ९ ॥

नि न्नाम तुल्य भक्त्या मस्तक त्वत्पदाब्जे भवजलनिधिमग्नं रक्ष

मामार्तबंधो ॥ ९९ ॥ रामरत्नमहं बंदे चित्रकूटपतिंहरिम ॥ कौसल्याशु

क्तिसंभूत जानकीकंठभूषणम् ॥ १०० ॥ इतिश्रीसनत्कुमारसंहिता

यांनारदोक्तं श्रीरामचंद्रस्तवराजस्तोत्रसंपूर्णम् ॥ विमलकमल

नेत्रं विस्फुरन्नीलगात्रं तपनकुलपवित्रं दानविध्यांतमित्रंभुव

नकुलचरित्रंभुमिपुत्रिकलत्रंममितगुणसमुद्रं श्रीरामचंद्रंनमा

मि ॥ अथसाधनविधिलिखते ॥ प्रथमअषाडमासमेंत्रिकाल १५

पंदरापाठकरे एकहारभोजनभुमिपरसोई क्रोधइन्द्रिजीतधूपगूग

लघृतकादीपक भोजनदूधपीवेतोसर्वसिद्धिहोय ॥ १ ॥ श्रावणमा

समेंपाठ ११ त्रिकालकरोधुपदीपदेकपूरगूगलकंदमूलपावेतो
तीनलोकअचेतचेतावेमनवांछितफलपावे॥२॥ भादवामाससे
पाठ २१ त्रिकालकरेदेवदरसन धूपगूगलदे॥३॥ आसोजमास
सेंपाठ २१ त्रिकालकरे सूर्यविंवमें सूर्यउदयतेकरेधूपगूगलके
सरघृतभोजनपूलपावेतोइछाचार्यहोय॥४॥ कार्तिकमास पाठ
२५ पचीसत्रिकालकरे नित्यनेमसुसूर्यसनमुखधूपगूगलघृ
तवातीशुक्लभोजन इसविधि सूकापीपलह्राहोइ लोटाजलसू
र्यसनमुखदे॥५॥ अगह्नमासपाठ २१ त्रिका.करेधूपगूगलघृत
शुक्लभोजनराजगीपावे तीनोंलोकमेंवीजयभवेत रिद्धिसिद्धिपा

६॥ फूसमास १५ त्रिका·करेधूपगूगलघृतभुक्तभोजनतंदुलगौ
कादूधपावेमनकामनोरथपावेसिद्धिहोइ॥७॥ माघमासपाठ१२
त्रिकालकरेधूपगूगलवीलकापत्रकरेघृतगुडपावे अश्वमेदय
ग्यकाफलहोइ रामदरसनपावेसही॥८॥ फागुणमासपाठ ११ त्रि
का·करे धूपगूगलघृत मोथ्यापीस्तासकरपावे देवकायाहो
इ॥९॥ चैत्रमासमे ४० त्रिका·धूपगूगलकसूमकेफूलभोजनती
नभागपावे सर्वकालमेंसुखीहोइ लक्ष्मीपावे॥१०॥ बैसाखमास
मे ३० त्रिका·करेधूपगूगल नागकेसरकपूर भोजन-चांवल
सकरघृतपावेतोरामदूतकादर्शनहोइ॥११॥ जेठमासमें ३१ त्रिका·

धूप गूगल दूलाय ची भोजन एक मास में पावे तो तीन लोक में दर
सन होइ खारा जल मीठा होय ॥ श्रीरामजी का पूजन करे ॥ काम
कू जीते ब्रह्मचर्य रहे ॥ पाठ करने में कीसी से वात न करे ॥ त्रिका
ल पाठ लिखा मूजब करे ॥ राम मंत्र का ध्यान करे ॥ विश्वास राखे फ
ली भूत होइ सम्वत १९०४ का फागुण मास सुभ जान ॥ तिथि
असिृमि सुकल पक्ष में ॥ पूस्तक भई तमाम ॥ श्री रामकृष्णचंद्रजी
कू सदा वारु प्रणाम ॥ पुस्तक पढे देखे जिनकूं प्रेम सुख पटवारी को
राम राम ॥ रहता श्री नृसिंह जी के सरणे ॥ नया नगर के माहि ॥ परमे
श्वर सबकूं खूस रखे ॥ मैं अरज करूं सिन्रा नीवाय ॥ श्रीरामजी सा हछुः

११

पवन मंद सुगंध शीतल्न हेममंदिर सोभितं॥ निकट गंगा वहत निर्मल्न॥
श्रीवद्रीनाथ विसम्वरम्॥१॥ शेषसुमिरण करत निशि दिन धरतध्यान
महेश्वरम् श्रीवेद ब्रह्मा करत स्तुति॥ श्रीवद्रीनाथ विसम्वरम्॥२॥
इन्द्र चन्द्र कुम्हेर धुनि करधूपदीप प्रकाशितम॥ सिद्ध मुनिजन कर
तजैजै॥ श्रीवद्रीनाथ विसम्वरम्॥३॥ सत्य गौरी गणेश शारद नारद
मुनी उच्चारनम्॥ योग्यध्यान अपार लीला॥ श्रीवद्रीनाथ विसम्व
रं॥४॥ यक्ष किन्नर करत कौतुक। ज्ञान गंधर्व प्रकाशितं॥ श्रीलक्ष्मी
कमला चंवर डोल्लें॥ श्रीवद्रीनाथ विसमवरं॥५॥ कैलाशमें एक देव नि
रंजन॥ शैल शिखर महेश्वरम्॥ श्रीराजा युधिष्ठिर करत स्तुति॥ श्रीब

द्री नाथ विसम्वरम् ॥ ६ ॥ श्री बद्री नाथ विसम्वरम् ॥ ६ ॥ श्री बद्री नाथ
जी के पंच रत्न पठत पाप विनास नम् ॥ कोटि तीरथ मयो पुण्य नम
प्राप्ते फल दायकं ॥ ७ ॥ हाथों में कंकण कानों में कुण्डल ॥ हीरा रत्न
जडावतम् ॥ सांवली सूरत मायोरी मूर्त्ति ॥ श्रीबद्री नाथ विसम्वरं ॥ ८ ॥
हरे राम हरे राम राम राम हरे हरे हरे कृष्णा हरे कृष्णा कृष्णा कृष्णा हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्णा हरे कृष्णा कृष्णा कृष्णा हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्णा हरे कृष्णा कृष्णा कृष्णा हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्णा हरे कृष्णा कृष्णा कृष्णा हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्णा हरे कृष्णा कृष्णा कृष्णा हरे हरे

हरे राम हरे राम राम राम हरे हरे हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे
हरे राम हरे राम राम राम हरे हरे हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे

